# बालबोधः

# BĀLABODHAḤ

Eds.,
Prof. V.Venkataramana Reddy
Dr T.S.R.Narayanan



ORIENTAL RESEARCH INSTITUTE
SRI VENKATESWARA UNIVERSITY
TIRUPATI

# PREFACE

Under the series of Texts and Studies, the S.V.U.Oriental Journal is publishing some rare and unpublished manuscripts in the form of independent treatises (prakaraṇa granthas) on Śāstrās and Darśanās deposited in the Oriental Research Institute's Manuscripts Library. In this series some small, minor works dealing with the fundamentals of Indian philosophy are also published to inculcate interest among the general public who are enthusiastic to know the basics of the subject written in simple language.

In this connection **"Bālabōdha"** a small work which is in the form of a dialogue between a teacher and a disciple is brought out in this issue. The dialogue method in the form of questions and answers ( Prasnōttara Saṃvāda Paddhati) belongs to ancient Indian tradition which is usually adopted in the Upanisadic period and is also a convenient way for exposition of the difficult subject matter.

Even the Buddhist philosophers are also adopted this method in a Pāḷi text '*Milinda Pañho*', which is a spiritual dialogue between the Bactrian Greek King Menander and a Hindu converted Buddhist monk Thera Nāgasena (175 B.C.). "It is not only a comprehensive exposition of Buddhist metaphysics, ethics and psychology but also a valuable historical document and literary achievement as a work of Theravāda Buddhism in Pāli prose." (For further details See : Shankar Goyal's article in this issue, pp. 19-26).

Bālabōdha, the present text is edited with a solitary palm leaf manuscript bearing the Stock No. 1267(a) deposited in the S. V.U. O.R.I. Library.

According to the Colophon of the text the work is ascribed to Śrī Ādi Śaṅkarācārya. No name is better known to the history of Indian philosophy than that of Śrī Śaṅkarācārya and no doctrine has exercised greater influence than his on Hindu thought in general. Its' profund influence is conceived even at present, notwithstanding the existence of a number of rival systems in Indian philosophy.

Like Kavikulaguru Kāḷidāsa who has been attributed to several works in Sanskrit literature, Śrī Ādi Śaṅkarācārya as a philosopher enjoys as the author of many philosophical works in Indian Philosophy. Śrī Śaṅkara is praised both by traditional and modern scholars as "the Prince of Philosophical Prose", whose diction in Sanskrit is well-known for its clarity, decency, decorum, digninty and above all a great sanctity pervades through out Ācārya's writings. All the above elements may be experienced even in this small work also.

ज्ञानादेव हि कैवल्यम् as the dictum goes in Advaita philosophy. "It is often been misunderstood that according to Śaṅkara, Knowledge or illumination (Jñāna) is a mere means of *mokṣa* or freedom. But it is more appropriate to say that *mokṣa* or freedom, according to Śaṅkara is nothing but illumination (Jñāna). श्रुतयो ब्रह्मविद्यानन्तरं मोक्षं दर्शयन्त्यो मध्ये कार्यान्तरं

वारयन्ति (ब्रह्मसूत्रशाङ्करडाष्यम् 1-1-4). (For further details See : G.C. Nayak's article in this issue, pp. 6ff).

Thus, Bālabōdha which is attributed to Śrī Śaṅkara, is a short manual dealing with the basic tenets of Indian philosophy in general and Advaitā in particular. It is in the form of a dialogue betwen a teacher and a student written in a chaste and lucid style in Sanskrit.

Tirupati - V.Venkataramana Reddy
2.09.2001 - T.S.R.Narayanan

# विषयसूचिका

श्रीमच्छङ्करभगवत्पादचरणारविन्दाभ्यान्नमोनमः।

# बालबोधः

आध्यात्मविद्याप्रबोधप्रकारंव्याख्यास्यामः।
आधिभौतिकाधिदैविकाध्यात्मिकादिता
पत्रयाग्निसन्तप्तस्सकलसाधनोपेतस्संसाराद्वि-रम्य शिष्यस्सद्गुरुं शरणं गत्वा साष्टाङ्गं प्रणिपत्य विज्ञप्तिं करोति। भो! स्वामिन् मम संसारनिवृत्तिं कुरु।

**गुरुरुवाच-**

अरे शिष्य तव संसारनिवृत्तिःज्ञानेन भवितव्या।ज्ञानञ्च श्रवण मनननिधिध्यासनैःब्रह्मसाक्षात्कारो भवति।

**शिष्य उवाच-**

भो स्वामिन्
श्रवणन्नाम किम्?
मननन्नाम किम्?
निदिध्यासनन्नाम किम्?
कस्साक्षात्कारः?

**गुरुरुवाच-**

भोवत्स-श्रवणन्नाम वेदान्तवाक्यानामुपक्रमोपसंहारतात्पर्यलिङ्गानां साधनचतुष्टययुक्तस्सन् श्राव्यम्।
मननन्नाम
श्रुतार्थस्य उपपत्यनुपपत्तिभ्यां युक्तिभिरालोचनं मननम्।
निदिध्यासनन्नाम
मनसि निश्चितार्थस्य तदेकनिष्ठत्वेन संशयविपर्ययत्यागेन अवस्थानं निदिध्यासनम्।स एव फलितसाक्षात्कारः। श्रुतिवाक्यं प्रमाणम्।
भिद्यते हृदयग्रन्थिः छिद्यन्ते सर्वसंशयाः।

क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावरे।।

**शिष्यः-**

भो स्वामिन्! साधनचतुष्टयन्नाम किम्?

**गुरुरुवाच-**

नित्यानित्यवस्तुविवेकः।
इहामुत्रार्थफलभोगविरागः।
शमादिषट्कम्।
मुमुक्षुता च।
नित्यमात्मस्वरूपं हि दृश्यन्तद्विपरीतकम्।
एवं यो निश्चयस्सम्यक् विवेकोऽस्य नरस्य वै।।
जगत्सर्वमनित्यम्। ब्रह्मैव नित्यम्।इहामुत्रफलभोग विरागोनाम
ब्रह्मादिस्थावरान्तेषु वैराग्यं विषयेष्वनु।
तथैव काकविष्ठायाः वैराग्यं तद्धि निर्मलम्।।
इहपरसुखविषयेषु वैराग्यं विरागः।
शमादिषट्कंनाम शमोदमउपरतिस्तितिक्षा श्रद्धासमाधानम्।

**शमोनाम-**

सदैव वासनात्यागश्शमोऽयमिति शब्दितः।

**दमोनाम-**

निग्रहो बाह्यवृत्तीनां दम इत्यभिधीयते।

**उपरतिर्नाम-**

विषयेभ्यःपरावृत्तिः परमोपरतिर्हि सा।

**तितिक्षा नाम-**

सहनं सर्वदुःखानां तितिक्षा सा शुभामता।

**श्रद्धा नाम-**

निगमाचार्यवाक्येषु भक्तिश्श्रद्धेति विश्रुता।

**समाधानन्नाम-**

चित्तैकाग्र्यन्तु संलक्ष्ये समाधानमिति श्रुतम्।
एतत् शमादिषट्कम्

**मुमुक्षुता-**

संसारबन्धनान्मुक्तिः कथं स्यान्मे कदा विधे।
इति यासु दृढा बुद्धिर्वक्तव्या सा मुमुक्षुता।।
एवं साधनचतुष्टयसम्पन्नस्यैव ब्रह्मात्मैक्यज्ञाने अधिकारः।
आत्मैकविज्ञानं विचारेण विना न जायते।विचारः कार्यः।

**शिष्य उवाच-**

विचारोनाम-

**गुरुरुवाच-**

अहं कः?इदं सर्वं कथंजातम्? कुत्र वा लयं गच्छति?
सदा सद्भिः विचारः कार्यः

**शिष्यउवाच-**

भो स्वामिन्! अहन्तुविचारन्नजानामि सन्तः कुत्र वा सन्ति? को वेद? त्वमेव मां करुणाकटाक्षपोतेन संसारवारिधेः पारंदर्शय त्वमेव मे गतिः।

**श्रीगुरुरुवाच-**

भो वत्स! मय्येव तव दृढा भक्तिश्चेत् श्रुणु। त्वन्तु देहो न भवसि। अतः जडत्वात् दृश्यत्वात् दृश्यादन्यो द्रष्टेति न्यायात्।अमङ्गळत्वाच्च। नित्यत्वाच्च।सविकारत्वाच्च जात एव देहस्त्वन्न भवसि। त्वन्तु चैतन्यमात्रम्।

**शिष्य उवाच-**

भो स्वामिन् अहं देहो न भवामि चेत् देहस्य
सुखदुःखम्मां बाधते।अत एव देह एवाहम्।

**गुरुरुवाच-**

देहो जडः

**शिष्य उवाच-**

कथञ्जडः देहस्तावत् बाल्यमारभ्य नित्यं वर्धते जडस्य वृद्धि र्न संभवति। एवमेव सर्वम्।

**गुरुरुवाच-**

भो शिष्य! देहतादात्म्येन तव सुखदुःखं प्रतिभाति। यथा

धनादिकन्नष्टञ्चेत् दुख भवति। तेनैव द्रव्यादिकं स्वयं भवति वा
सुखदुःखयोः कारणाभावेऽपीति।
यथा लाभालाभे तादात्म्येन सुखदुःखे भासतः।
तथैव देहतादात्म्येन सुखदुःखे प्रतिभासतः।।
यथा द्रव्यादिभ्यः स्वयं भिन्नः तथैव देहात् स्वयं भिन्नः।जड
त्वञ्च श्रुणु- देहो वर्धते इतिकृत्वा देहो जडो

न भवतीति यद्वदसि तदसत्। जडस्यापि वृद्धिदर्शनात्। यथा
वेदिका मृद्रूपा जडापि मृन्निक्षेपेण कुड्यादिरूपेण वर्धते।
किन्तन्मात्रेण चैतन्यं भवति वा। तथैवान्नमयशरीरस्य पुनःपुनः
अन्ननित्यन्निक्षेपेण देहो वर्धते। अत एव जडः।अमङ्गळत्वाच्च

श्रुणु-

जन्मकालपरामर्शेअमङ्गळंसिध्दमेव।तवदेहःदृश्यत्वं कथमिति चेत् मम शरीरे श्यामगौरवत्वादिना प्रतीयमाने कृश स्थूलत्वादिभिश्च सिद्धमेव। त्वन्तु द्रष्टा।अनित्यत्वं श्रुणु।बाल कौमाराद्यवस्थायुक्तत्वात् सविकारित्वम्।त्वन्तु देहाद्यविकारः। नित्यश्च। योऽहं बाल्ये क्रीडासक्तः यौवने विषयासक्तः वार्धक्ये चिन्तायुक्तः तावत्तावत् सोऽहमित्यनुभवात् ताभिर्व्यवस्थाभिर्युक्तस्य नित्यत्वम्। तस्माद्देहो न भवसि।त्वञ्चिन्मात्रोऽसि साक्षी।

**शिष्य उवाचः-**

भो! स्वामिन् तव प्रसादलेशात् देहो न भवामीति मम ज्ञानं
जातम्। तावता मम को लाभः?

**गुरुरुवाचः-**

यदा त्वं पञ्चीकृतपञ्चमहाभूत समभवस्थूलशरीरन्नभवसि तदा
नामरूपजातिवर्णाश्रमादयस्तव न सन्ति। एतत् सर्वं स्थूल **शरीरस्यैव।**

**शिष्य उवाचः-**

भो स्वामिन्! त्वत् प्रसादात् सत्यं त्वदाज्ञया अहं स्थूलदेहो न
भवामि। तत्सम्बन्धाः वर्णाश्रमादयस्स्त्रिपुन्नपुंसकादयः श्यामगौर

वत्वादि नामरूपादयः मम न सन्ति।अतः परमिन्द्रियाण्यहम्। इन्द्रियेषु सत्सु पश्यामि श्रृणोमि स्पृशामि इत्याद्यनुभवाच्च इन्द्रियाण्यहमेव।

**गुरुरुवाचः-**

भे वत्स! इन्द्रियाण्यपि जडानि त्वन्नभवसि पञ्चभूतकार्यत्वात्

**शिष्यः:-**

भो स्वामिन् इन्द्रियाणि जडानि कथं भूतकार्याणि कथम्?

**गुरुरुवाचः-**

यो वत्स इन्द्रियाणि आत्मानन्नजानन्ति परमपि न जानन्ति यथा प्रदीपवत्। भो श्रोत्र इदानीं त्वं अत्र तिष्टसीत्युक्ते भो स्वामिन् अत्र स्थास्यामीति वक्तुमसमर्थं एवं सर्वाणि करणानि अत जडानि। भूतकार्यं कथमिति श्रुणु। श्रोत्रेन्द्रियमाकाशकार्यम् आकाशाध्यात्मिक गुणशब्दग्रहणे साधनम्। त्वगिन्द्रियं वायुकार्य वाय्वाध्यात्मिकगुणस्पर्शग्रहणे साधनम्। चक्षुस्तेजःकार्यम्। तेज आध्यात्मिकगुणरूपग्रहणे साधनम्। रसनेन्द्रियमपां कार्यम्। जलाध्यात्मिकगुणरसग्रहणे साधनम्। एतानि ज्ञानेन्द्रियाणि। पञ्चभूतसत्वगुणादुत्पन्नानि।अथ कर्मेन्द्रियाणि श्रुणु।

**कर्मेन्द्रियाणिः-**

वाक् आकाशकार्यम् आकाशाध्यात्मिकगुणशब्दो वदति। पाणीन्द्रियं वायुकार्यम्। वाय्वाध्यात्मिकगुणेन गृह्णाति। पादेन्द्रियं तेजः कार्यम्। तेज आध्यात्मिककार्यं गमनादिकं करोति।गुह्येन्द्रियमपांकार्यम्।जलाध्यात्मिककार्यम्। मूत्ररेतोत्सर्गादिकं करोति। गुदेन्द्रियं पृथिवीकार्यम्। पृथिव्याध्यात्मिकगुणम्। पुरीषादिकं करोति। एवं कर्मेन्द्रियाणिपञ्चभूतरजोगुणेभ्यः उत्पन्नानि। पञ्चभूततमोगुणात् विषया उत्पन्नाः। शब्दस्पर्शरूपरसगन्धाः वचनादानगमन विसर्गानन्दाः। एतानि सर्वाणीन्द्रियाणि पञ्चभूताध्यात्मिक कार्याणि जडानि।स्वस्वदेवतानुग्रहेण स्वस्वविषयान् प्रति वर्तन्ते।

**शिष्यः-**

कस्येन्द्रियस्य किं दैवतम्?

**गुरुरुवाच-**

श्रोत्रेन्द्रियस्य दिगधिदैवतम्
त्वगिन्द्रियस्य वायुरधिदैवतम्
चक्षुरिन्द्रियस्य सूर्योऽधिदैवतम्
रसनेन्द्रियस्य वरुणोऽधिदैवतम्
घ्राणेन्द्रियस्याश्विनीदेवतावधिदैवतम्
वागिन्द्रियस्याग्निरधिदैवतम्
पाणीन्द्रियस्य इन्द्रोऽधिदैवतम्
पादेन्द्रियस्य विष्णुरधिदैवतम्
पाय्विन्द्रियस्य मृत्युरधिदैवतम्
गुह्येन्द्रियस्य प्रजापतिरधिदैवतम्
इन्द्रियाणामधिभूतञ्च श्रुणु
श्रोत्रेन्द्रियस्य श्रोतव्यमधिभूतम्
नेत्रेन्द्रियस्य द्रष्टव्यमधिभूतम्
त्वगिन्द्रियस्य स्पर्शनोऽधिभूतम्
रसनेन्द्रियस्य रसग्रहणमधिभूतम्
घ्राणेन्द्रियस्य गन्धग्रहणमधिभूतम्
वागिन्द्रियस्य वक्तव्यमधिभूतम्
पाणीन्द्रियस्य दातव्यमधिभूतम्
पादेन्द्रियस्य गमनमधिभूतम्
पाय्विन्द्रियस्य विसर्जनमधिभूतम्
उपस्थेन्द्रियस्य उत्सर्जनमधिभूतम्
सर्वाणि करणानि स्वस्वदेवतानुग्रहेणैव स्वस्वविषयान् जानन्ति।अत एव जडानि तानि त्वन्न भवसि।

**शिष्य उवाच:-**

भो स्वामिन् सत्यम् इन्द्रियाणि जडानीति मम ज्ञानञ्जातम्।परं मन एवाहम्।स्वस्थे मनसि पश्यामि श्रृणोमि तदभावे न पश्यामि न श्रृणोमि अत एव मन एवाहम्।

**गुरुरुवाच-**

भो वत्स!मनःकथं त्व भवसि? मे मनः इदानीं समाधानतया तिष्ठतीत्यनुभवात् मनसोऽपि भिन्न एव त्वम्मनस्तव दृश्यम्।मनसस्त्वन्दृष्ट्वा मनस्तवाधीनत्वाच्चातएवमनो न भवसि।प्राणे पश्यामि श्रृणोमि प्राणाभावे न पश्यामि न श्रृणोमि अत एव

**शिष्य उवाचः-**

भो स्वामिन्! सत्यं मनो न भवामि बुध्या निश्चितेऽर्थे मनो धावति। अत एव बुद्धिरेवाहम्। साप्यन्तःकरणवृत्तित्वात्। अत एव प्राणएवाहमस्मि।
**गुरुरुवाचः**-भो वत्स प्राणस्त्वन्न भवसि जडत्वात्।

**शिष्यः**

भो स्वामिन् प्राणो जडः कथम्?

**गुरुः-**

शृणु रात्रौ प्रसुप्तस्य पुरुषस्य वस्तूनि चोरो गृहीत्वा गच्छति तदामीं प्राणस्तिष्ठत्योव । कथन्नाव बुध्यते। अत एव जडः।

**शिष्यः-**

भोस्वामिन्! प्राणो जडश्चेत् जडशरीरं कथञ्चेष्टयति जडस्य चेतनायोगात् ।

**गुरुः-**

श्रृणु जडस्यापि जडचालकत्वं लोके दृष्टमस्ति यथा चण्डमारुतः गृहोपरिस्थिततृणादीन् नभसि भ्रामयित्वान्यत्र पातयति। किन्तावता वायुश्चैतन्यं भवति वा । एवं प्राणस्यापि देहचेष्टकत्वम्।अत एव प्राणोऽपि त्वन्न भवसि।

**शिष्यः-**

भो स्वामिन् !त्वदाज्ञया एतत्सर्वमहन्नभवामि। तावता मम को लाभः?

**गुरुः-**

अरे शिष्य! सावधानतया श्रृणु। एतत् सर्वं सप्तदशकं लिङ्गशरीरं त्वं यदा न भवसि। तदानीं देवतिर्यङ्मनुष्यादिजन्मादिकन्नास्ति। यथा जानुभग्नपङ्गोरिव गमनागमनन्तव नास्त्येव।

**शिष्यः-**

भो स्वामिन्ः! त्वत्प्रसादादेव सत्यं परञ्च प्राणमनो बुद्दि दशेन्द्रिय समन्वितम्। अपञ्चीकृत भूतोत्थं सूक्ष्माङ्गं भोगसाधनम्।

**शिष्यः-**

भोस्वामिन्।एतत्सर्वमहन्न भवामि तर्हि कोऽहमिति मामहन्नजानामि।

कृपया स्वामिना वक्तव्यम्।

**गुरुः-**

भो शिष्य! इदमेव तव कारणशरीरं कथम्? भो शिष्य अरे सर्वज्ञानासि स्वात्मानमेव न जानामीति वदसि। इदमेव तवाज्ञानं सर्वेषां स्थूलसूक्ष्म शरीराणां कारणत्वात् कारणमित्याभिधीय्यते। इयमेवाविद्या संसारानर्थदायिनी। "आब्रह्म ज्ञानैक निलया अस्या निवृत्तिरेव मुक्तिः। मुमुक्षुभिः प्रयत्नैः परिहर्तव्या"।

**शिष्यः-**

भो स्वामिन् कथं परिहर्तव्या?

**गुरु**

अरे शिष्य! त्वमेव मामहन्नजानामीति वदसि। तर्हि त्वत्तोऽन्यः कोऽपि वदति वा? वक्ता श्रोता द्रष्टा त्वमेव।

**शिष्यः-**

अस्मिन्नर्थे श्रुतिः प्रमाणं वर्तते वा?

**गुरुः-**

अरे वत्स! सर्वेषां वेदान्तानां तात्पर्यम् अत्रैव श्रुतिवाक्यं प्रमाणम्। "नान्यतोऽस्मि वक्ता नान्यतोऽस्मि श्रोता नान्यतोऽस्मि मन्ता नान्य तोऽस्मि द्रष्टा चेति" येन वा पश्यति येन वा श्रुणोतीत्यादि प्रमाणानि बहूनि सन्ति। त्रिषु धामसु यत् भोज्यं भोक्ता भोगश्च यत् भवेत्। तेभ्यो विलक्षणस्साक्षी चिन्मात्रोऽहं सदाशिवः।।

स्मृतिरपि :-

क्षेत्रज्ञञ्चापि मां विद्धि सर्वभूतस्तमात्मानमिति।

पुराणञ्च:-

सकल इदमहञ्च वासुदेवः परमः पुमान् परमेश्वरस्स एकः।
इति मतिरमला भवत्यन्ते हृदयगते व्रज ताम् विहाय दूरात्।
एवं विज्ञानेन स्वात्मरामस्सन् यस्तिष्ठति स ब्रह्म सशिवस्स
हरिस्सेन्द्रस्सोऽक्षरः परमस्वराट्।
ज्योतींषिविष्णुःभुवनानिविष्णुर्वनानि विष्णुर्गिरयो दिशश्च। नद्यस्समुद्राश्च स
एवसर्वम्। इदन्त्वन्नास्ति च विप्रवर्य। एतादृशेनानुभवेन शिष्ययुक्तस्सन्
स्वानुभवस्थितिन्दर्शयति। नहि बन्धपदन्नहि मोक्ष पदं नहि पापपदं नहि
पदम्। नहि रिक्तपदन्नहि पूर्णपदं किं रोदिषि मानस सर्वसमम्।
अहो अहन्नमो मह्यं दक्षो नास्तीति मत्समः।
असंस्पर्शशरीरेण येन विश्वञ्चिरन्धृतम्।
मयिसुखबोधपयोधौ महति ब्रह्माण्ड बुद्बुदसहस्रम्।
मायामयेन मरुता भूत्वा भूत्वा पुनस्तिरोधत्ते।
हव्यमहं कव्यमहं हेयोपादेयभावशून्योऽहम्।
हरिरहमस्मि हरोऽहं विधिरप्यहमस्मि कारणन्तेषाम्।
धर्माधर्ममयोऽहं धर्माधर्मादिबन्धरहितोऽहम्।
धार्मिकजनसुलभोऽहं धन्योऽस्मि धातुरादिभूतोऽहम्।।
मन्योऽहमस्मि महताम्मन्दमतीनाम्माननीयोऽहम्।
मद मान राग मोहित मानस दुर्वासना दुरापोऽहम्।
नाहन्नमामि देवान् एते नमस्यान्ति च नित्यम्माम्।
मत्तः परतरो नास्ति चिन्मात्रोऽहं सदाशिवः।
किमिदं किमस्यरूपं कथमिदमुदभूदमुष्य को हेतुः।
इति न कदापि चिन्त्यम्। चिन्त्यम्मायेति धीमता विश्वम्।
गुरुणैव नावा प्राक्तनभाग्यानुकूलमारुतेन।।
दुस्सहदुःखतरङ्गोत्तुङ्ग संसार सागरोत्तीर्णः।
शरणन्नहि मम जननी सुतो न सोदरश्चान्ये।।
परमं शरणमिदम्मे चरणम्ममसूर्ध्नि देशिकन्यस्तम्।

आस्ते देशिकचरणन्निरवधिरास्ते मदीक्षणे करुणा।।

आस्ते किमपि तदुक्तं किमितःपरमस्मि जन्मसाफल्यम्।।

इदं ज्ञानं परं श्रेष्ठं सतां सम्मतमादरात्।

यश्शृणोति च मेधावी स मुक्तो नात्र संशयः।

**इतिश्रीपरमहंसपरिव्राजकाचार्य**

**श्रीमत् शंकराचार्यविरचितबालबोधसङ्ग्रहस्समाप्तः।**

******